# चम्पूरामायणे

# बालकाण्डम्

४० – ०५.११.२०१८

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology



vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

# मङ्गलम्

- लक्ष्मीं तनोतु नितरामितरानपेक्षम्
- अङ्घ्रिद्वयं निगम-शाखि-शिखा-प्रवालम् ।
- हैरम्बमम्बुरुह-डम्बर-चौर्य-निघ्नम्
- विघ्नाद्रि-भेद-शतधार-धुरन्धरं नः ॥

Vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam · Value Education · Technology

# पुनरावर्तनम्

- मिथिलामाहात्म्यम् – देव्या यस्या
- सीताविवाहस्य पणः
- धनुरारोपणाय विश्वामित्रस्य आज्ञा

रामे बाहुबलं विवृण्वति धनुर्वंशो गुणारोपणं
नाभूत्केवलमात्मना तिलकिते वंशोऽपि वैकर्तने।
आकृष्टं नितरां तदेव न परं सीतामनोऽपि द्रुतं
भङ्गस्तस्य न केवलं क्षितिभुजां दोःस्तम्भदम्भस्य च॥१०३॥

- रामे, बाहु-बलम्, विवृण्वति, धनुः-वंशो, गुण-आरोपणम्, न, अभूत्, केवलम्, आत्मना, तिलकिते, वंशो, अपि, वैकर्तने, आकृष्टम्, नितराम्, तत्, एव, न, परम्, सीता-मनः, अपि, द्रुतम्, भङ्गः, तस्य, न, केवलम्, क्षिति-भुजाम्, दोः-स्तम्भ-दम्भस्य, च

Sanskritam - Value your Technology

रामे बाहुबलं विवृण्वति धनुर्वंशे गुणारोपणं
नाभूत्केवलमात्मना तिलकिते वंशेऽपि वैकर्तने।
आकृष्टं नितरां तदेव न परं सीतामनोऽपि द्रुतं
भङ्गस्तस्य न केवलं क्षितिभुजां दोःस्तम्भदम्भस्य च॥१०३॥

- विवृण्वति [सति] = प्रकटयति
- कस्मिन् विवृण्वति? रामे
- किं विवृण्वति? बाहुबलम् = स्वस्य भुजपराक्रमम्
- केवलं न अभूत्

रामे बाहुबलं विवृण्वति धनुर्वंशे गुणारोपणं
नाभूत्केवलमात्मना तिलकिते वंशोऽपि वैकर्तने।
आकृष्टं नितरां तदेव न परं सीतामनोऽपि द्रुतं
भङ्गस्तस्य न केवलं क्षितिभुजां दोःस्तम्भदम्भस्य च॥१०३॥

- किं केवलं नाभूत्? गुणारोपणम् = मौर्वीयोजनम्
- कस्मिन् गुणारोपणम्? धनुर्वंशे = चापस्य वेणुदण्डे
- [किन्तु]
- वैकर्तने वंशो अपि = सूर्यवंशो अपि

रामे बाहुबलं विवृण्वति धनुर्वंशो गुणारोपणं
नाभूत्केवलमात्मना तिलकिते वंशेऽपि वैकर्तने।
आकृष्टं नितरां तदेव न परं सीतामनोऽपि द्रुतं
भङ्गस्तस्य न केवलं क्षितिभुजां दोःस्तम्भदम्भस्य च॥१०३॥

- कीदृशे वंशे? तिलकिते = अलङ्कृते
- केन तिलकिते? आत्मना = रामेण
- रामेण यदा धनुषि गुणः आरोपितः, तदैव तस्य शौर्येण तद्वंशस्य महिमा अपि महतीं प्रतिष्ठां प्राप इत्यर्थः ।

रामे बाहुबलं विवृण्वति धनुर्वंशो गुणारोपणं
नाभूत्केवलमात्मना तिलकिते वंशेऽपि वैकर्तने।
आकृष्टं नितरां तदेव न परं सीतामनोऽपि द्रुतं
भङ्गस्तस्य न केवलं क्षितिभुजां दोःस्तम्भदम्भस्य च॥१०३॥

- केवलम् आकृष्टं न अभूत्
- किं केवलं न आकृष्टम् अभूत्? तत् एव = धनुषः दण्डः एव
- कथम् आकृष्टम्? नितराम् = अतिशयेन
- [किन्तु]
- सीतामनः अपि = सीतायाः हृदयम् अपि

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Beyond Technology

रामे बाहुबलं विवृण्वति धनुर्वंशे गुणारोपणं
नाभूत्केवलमात्मना तिलकिते वंशेऽपि वैकर्तने।
आकृष्टं नितरां तदेव न परं सीतामनोऽपि द्रुतं
भङ्गस्तस्य न केवलं क्षितिभुजां दोःस्तम्भदम्भस्य च॥१०३॥

- कथम् आकृष्टम्? परं द्रुतम् = अत्यन्तं शीघ्रम्
- यदा रामः बलेन धनुः कृष्टवान्, तदैव अतिवेगेन सीतायाः मनः अपि आकृष्टवान् इत्यर्थः

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam - Value through Technology

रामे बाहुबलं विवृण्वति धनुर्वंशे गुणारोपणं
नाभूत्केवलमात्मना तिलकिते वंशेऽपि वैकर्तने।
आकृष्टं नितरां तदेव न परं सीतामनोऽपि द्रुतं
भङ्गस्तस्य न केवलं क्षितिभुजां दोःस्तम्भदम्भस्य च॥१०३॥

- केवलं न अभूत्
- कः केवलं न अभूत्? भङ्गः = विभेदः
- कस्य भङ्गः? तस्य = धनुषः
- [किन्तु]

रामे बाहुबलं विवृण्वति धनुर्वंशे गुणारोपणं
नाभूत्केवलमात्मना तिलकिते वंशेऽपि वैकर्तने।
आकृष्टं नितरां तदेव न परं सीतामनोऽपि द्रुतं
भङ्गस्तस्य न केवलं क्षितिभुजां दोःस्तम्भदम्भस्य च॥१०३॥

- दोःस्तम्भदम्भस्य च = भुजदण्डविषये बलाडम्बरस्य
- केषां दोःस्तम्भस्य? क्षितिभुजाम् = क्षत्रियाणाम्
- यदा रामस्य बलं सोढुम् अशक्तं शिवधनुः भग्नं, तदैव तच्चापम् उन्नेतुमपि अशक्तानां क्षत्रियाणां निजभुजबलस्य विषये अहङ्कारः अपि भग्नः

रामे बाहुबलं विवृण्वति धनुर्वंशो गुणारोपणं
नाभूत्केवलमात्मना तिलकिते वंशोऽपि वैकर्तने।
आकृष्टं नितरां तदेव न परं सीतामनोऽपि द्रुतं
भङ्गस्तस्य न केवलं क्षितिभुजां दोःस्तम्भदम्भस्य च॥१०३॥

- अन्वयः – रामे बाहुबलं विवृण्वति केवलं धनुर्वंशे गुणारोपणं न अभूत्, [किन्तु] आत्मना तिलकिते वैकर्तने वंशे अपि [गुणारोपणम् अभूत्] । तदेव नितरां न आकृष्टम् [किन्तु] सीतामनः अपि परं द्रुतम् [आकृष्टम् अभूत्] । न केवलं तस्य भङ्गः, [किन्तु] क्षितिभुजां दोःस्तम्भदम्भस्य च [भङ्गः अभूत्] ।

रामे बाहुबलं विवृण्वति धनुर्वंशे गुणारोपणं
नाभूत्केवलमात्मना तिलकिते वंशेऽपि वैकर्तने।
आकृष्टं नितरां तदेव न परं सीतामनोऽपि द्रुतं
भङ्गस्तस्य न केवलं क्षितिभुजां दोःस्तम्भदम्भस्य च॥१०३॥

- तात्पर्य्यम् – रामः यदा शिवधनुषः भङ्गेन स्वस्य बलं प्रकटितवान्, तदा अन्यान्यपि कार्याणि युगपत् साधितानि । तेन यदा धनुषि गुणः आरोपितः, तदैव तस्य शौर्येण तद्वंशस्य महिमा अपि महतीं प्रतिष्ठां प्राप । यदा सः बलेन धनुः कृष्टवान्, तदैव अतिवेगेन सीतायाः मनः अपि आकृष्टवान् । यदा रामस्य बलं सोढुम् अशक्तं शिवधनुः भग्नं, तदैव तच्चापम् उन्नेतुमपि अशक्तानां क्षत्रियाणां निजभुजबलस्य विषये अहङ्कारः अपि भग्नः ।

रामे बाहुबलं विवृण्वति धनुर्वंशे गुणारोपणं
नाभूत्केवलमात्मना तिलकिते वंशेऽपि वैकर्तने।
आकृष्टं नितरां तदेव न परं सीतामनोऽपि द्रुतं
भङ्गस्तस्य न केवलं क्षितिभुजां दोःस्तम्भदम्भस्य च॥१०३॥

- बाहुबलम् – बाह्वोः बलम्
- विवृण्वति – वि + “वृञ् वरणे” + शतृ – तकारान्तः पुं ७.१
- वैकर्तने – विकर्तनस्य इदम्, तस्मिन् – विकर्तन + अण् (तद्धितः)
- सीतामनः – सीतायाः मनः – सकारान्तः, नपुं, १.१

रामे बाहुबलं विवृण्वति धनुर्वंशे गुणारोपणं
नाभूत्केवलमात्मना तिलकिते वंशेऽपि वैकर्तने।
आकृष्टं नितरां तदेव न परं सीतामनोऽपि द्रुतं
भङ्गस्तस्य न केवलं क्षितिभुजां दोःस्तम्भदम्भस्य च॥१०३॥

- द्रुतम् – "जवोऽथ शीघ्रं त्वरितं लघु क्षिप्रमरं द्रुतम्" (अमरः)
- क्षितिभुजाम् – जकारान्तः, पुं, ६.३ । क्षितिं भुङ्क्ते ।
- दोःस्तम्भदम्भस्य – दोः एव स्तम्भः, दोःस्तम्भस्य दम्भः, तस्य
- शार्दूलविक्रीडितम्

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam · Value Education · Technology

रामाकर्षणभग्नकार्मुकभुवा ध्वानेन रोदोरुधा
दृप्तक्षत्रयशःसितच्छदकुले जीमूतनादायितम्।
वीरश्रीप्रथमप्रवेशसमये पुण्याहघोषायितं
सीतायाः किल मानसे परिणये माङ्गल्यतूर्यायितम्॥१०४॥

- राम-आकर्षण-भग्न-कार्मुक-भुवा, ध्वानेन, रोदः-रुधा, दृप्त-क्षत्र-यशः-सितच्छद-कुले, जीमूत-नादायितम्, वीर-श्री-प्रथम-प्रवेश-समये, पुण्य-अह-घोषायितम्, सीतायाः, किल, मानसे, परिणये, माङ्गल्य-तूर्यायितम्

रामाकर्षणभग्नकार्मुकभुवा ध्वानेन रोदोरुधा
दृप्तक्षत्रयशःसितच्छदकुले जीमूतनादायितम्।
वीरश्रीप्रथमप्रवेशसमये पुण्याहघोषायितं
सीतायाः किल मानसे परिणये माङ्गल्यतूर्यायितम्॥१०४॥

- जीमूतनादायितम् = मेघनिर्घोषेण इव आचरितम्
- कस्मिन् जीमूतनादायितम्? दृप्तक्षत्रयशःसितच्छदकुले = गर्वितानां क्षत्रियाणां कीर्तिरूपे श्वेतहंससमूहे
- केन जीमूतनादायितम्? ध्वानेन = शब्देन
- कीदृशेन ध्वानेन? रामाकर्षणभग्नकार्मुकभुवा = श्रीरामस्य कर्षणेन विदलितात् चापात् उत्पन्नेन
- पुनः कीदृशेन ध्वानेन? रोदोरुधा = भूमौ अन्तरिक्षे च व्याप्तेन

रामाकर्षणभग्नकार्मुकभुवा ध्वानेन रोदोरुधा
दृप्तक्षत्रयशःसितच्छदकुले जीमूतनादायितम्।
वीरश्रीप्रथमप्रवेशसमये पुण्याहघोषायितं
सीतायाः किल मानसे परिणये माङ्गल्यतूर्यायितम्॥१०४॥

- पुनः किं कृतम्? पुण्याहघोषायितम् = स्वस्तिवाचनरवेण इव आचरितम्
- कस्मिन् पुण्याहघोषायितम्? वीरश्रीप्रथमप्रवेशसमये = वीरलक्ष्म्याः आदिप्रवेशकाले
- पुनः किं कृतम्? माङ्गल्यतूर्यायितम् = मङ्गलवाद्येन इव आचरितम्
- कस्मिन् माङ्गल्यतूर्यायितम्? परिणये = विवाहे

रामाकर्षणभग्नकार्मुकभुवा ध्वानेन रोदोरुधा
दृप्तक्षत्रयशःसितच्छदकुले जीमूतनादायितम्।
वीरश्रीप्रथमप्रवेशसमये पुण्याहघोषायितं
सीतायाः किल मानसे परिणये माङ्गल्यतूर्यायितम्॥१०४॥

- कीदृशे परिणये? मानसे = हृदयस्थे
- कस्याः परिणये? सीतायाः = जानक्याः
- किल – खलु, निश्चयेन

रामाकर्षणभग्नकार्मुकभुवा ध्वानेन रोदोरुधा
दृप्तक्षत्रयशःसितच्छदकुले जीमूतनादायितम्।
वीरश्रीप्रथमप्रवेशसमये पुण्याहघोषायितं
सीतायाः किल मानसे परिणये माङ्गल्यतूर्यायितम्॥१०४॥

- अन्वयः – रामाकर्षण-भग्न-कार्मुक-भुवा रोदो-रुधा ध्वानेन दृप्त-क्षत्र-यशस्-सितच्छद-कुले जीमूतनादायितम्, वीरश्री-प्रथम-प्रवेश-समये पुण्याहघोषायितम्, सीतायाः मानसे परिणये माङ्गल्यतूर्यायितं किल

रामाकर्षणभग्नकार्मुकभुवा ध्वानेन रोदोरुधा
दृप्तक्षत्रयशःसितच्छदकुले जीमूतनादायितम्।
वीरश्रीप्रथमप्रवेशसमये पुण्याहघोषायितं
सीतायाः किल मानसे परिणये माङ्गल्यतूर्यायितम्॥१०४॥

- तात्पर्य्यम् – श्रीरामस्य बलवत्कर्षणेन शिवधनुः भग्नम् । तस्य विदारणेन जनितः नादः नभोमण्डलं भूमण्डलं च व्याप्नोत् । सः नादः निजबलेन गर्विताानां क्षत्त्रियाणां कीर्तिरूपस्य श्वेतहंससमूहस्य मेघनिर्घोषः इव आसीत् (जीमूतनादेन भीताः हंसाः पलायन्ते) । वीरलक्ष्म्याः आदिमप्रवेशकाले स्वस्तिवाचनम् इव आसीत् । सीतायाः मनसि विवाहस्य मङ्गलनाद इव अपि स नादः बभूव ।

रामाकर्षणभग्नकार्मुकभुवा ध्वानेन रोदोरुधा
दृप्तक्षत्रयशःसितच्छदकुले जीमूतनादायितम्।
वीरश्रीप्रथमप्रवेशसमये पुण्याहघोषायितं
सीतायाः किल मानसे परिणये माङ्गल्यतूर्यायितम्॥१०४॥

- रामाकर्षण... – रामस्य आकर्षणम्, रामाकर्षणेन भग्नम्, रामाकर्षणभग्नं कार्मुकम्, राम...कार्मुकात् भवति । ऊकारान्तः, पुं, ३.१ ।
- ध्वानेन – “शब्दे निनाद-निनद-ध्वनि-ध्वान-रव-स्वनाः” (अमरः)
- रोदोरुधा – रोदसी रुणद्धि । धकारान्तः, पुं, ३.१ । “द्यावापृथिव्यौ रोदस्यौ द्यावाभूमी च रोदसी” (अमरः)

रामाकर्षणभग्नकार्मुकभुवा ध्वानेन रोदोरुधा
दृप्तक्षत्रयशःसितच्छदकुले जीमूतनादायितम्।
वीरश्रीप्रथमप्रवेशसमये पुण्याहघोषायितं
सीतायाः किल मानसे परिणये माङ्गल्यतूर्यायितम्॥१०४॥

- दृप्तक्षत्र... – दृप्ताः क्षत्राः, दृप्तक्षत्राणां यशः, सितच्छदानां कुलम्, दृप्तक्षत्रयशः एव सितच्छदकुलम्, तस्मिन् ।
- जीमूतनादायितम् – जीमूतस्य नादः । जीमूतनाद इव आचरितम् – क्यङ् (नामधातुः)

रामाकर्षणभग्नकार्मुकभुवा ध्वानेन रोदोरुधा
दृप्तक्षत्रयशःसितच्छदकुले जीमूतनादायितम्।
वीरश्रीप्रथमप्रवेशसमये पुण्याहघोषायितं
सीतायाः किल मानसे परिणये माङ्गल्यतूर्यायितम्॥१०४॥

- वीरश्री – वीराणां श्रीः, प्रथमः प्रवेशः, वीरश्रियाः प्रथमप्रवेशः, वीरश्रीप्रथमप्रवेशस्य समयः
- पुण्याहघोषायितम् – पुण्यम् अहः, पुण्याहस्य घोषः, पुण्याहघोष इव आचरितम्

रामाकर्षणभग्नकार्मुकभुवा ध्वानेन रोदोरुधा
दृप्तक्षत्रयशःसितच्छदकुले जीमूतनादायितम्।
वीरश्रीप्रथमप्रवेशसमये पुण्याहघोषायितं
सीतायाः किल मानसे परिणये माङ्गल्यतूर्यायितम्॥१०४॥

- परिणये – विवाह-उपयमौ समौ। तथा परिणय-उद्वाह-उपयामाः पाणिपीडनम् (अमरः)
- माङ्गल्यतूर्यायितम् – माङ्गल्यस्य तूर्यम्, माङ्गल्यतूर्यम् इव आचरितम्
- लुप्तोपमालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ।

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

नवः कठिनकर्षणत्रुटितचापजन्मा क्षणा-
द्दिशां द्विरदघीङ्कृतैः कृतहरित्पतिस्वागतः।
जगद्भ्रमणकौतुकोच्चलितरामकीर्त्यङ्गना-
प्रयाणपटहध्वनिं प्रथयति स्म तारध्वनिः॥१०५॥

- नवः, कठिन-कर्षण-त्रुटित-चाप-जन्मा, क्षणात्, दिशाम्, द्विरद-घीङ्कृतैः, कृत-हरित्-पति-स्वागतः, जगत्-भ्रमण-कौतुक-उच्चलित-राम-कीर्ति-अङ्गना-प्रयाण-पटह-ध्वनिम्, प्रथयति, स्म, तार-ध्वनिः

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

नवः कठिनकर्षणत्रुटितचापजन्मा क्षणाद्दिशां द्विरदघीङ्कृतैः कृतहरित्पतिस्वागतः।
जगद्भ्रमणकौतुकोच्चलितरामकीर्त्यङ्गनाप्रयाणपटहध्वनिं प्रथयति स्म तारध्वनिः॥१०५॥

- प्रथयति स्म = प्रकटयति स्म
- कः प्रथयति स्म? तारध्वनिः = उच्चशब्दः
- कीदृशः तारध्वनिः? नवः = अभूतपूर्वः
- पुनः कीदृशः तारध्वनिः? कठिनकर्षणत्रुटितचापजन्मा = दृढाकर्षणहेतुना भग्नात् धनुषः उत्पन्नः

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

नवः कठिनकर्षणत्रुटितचापजन्मा क्षणाद्दिशां द्विरदघीङ्कृतैः कृतहरित्पतिस्वागतः।
जगद्भ्रमणकौतुकोच्चलितरामकीर्त्यङ्गनाप्रयाणपटहध्वनिं प्रथयति स्म तारध्वनिः॥१०५॥

- पुनः कीदृशः तारध्वनिः? कृतहरित्पतिस्वागतः = दिक्पालकविहितं स्वागतं सूचयन्
- कैः कृतहरित्पतिस्वागतः? दिशां द्विरदघीङ्कृतैः = भीतानां दिग्गजानां क्रन्दनेन
- कथं कृतहरित्पतिस्वागतः? क्षणात् = अतिशीघ्रम्

vyoma
॥वाचं धेनुमुपासीत॥
Samskritam - Value Education - Technology

नवः कठिनकर्षणत्रुटितचापजन्मा क्षणाद्दिशां द्विरदघीङ्कृतैः कृतहरित्पतिस्वागतः।
जगद्भ्रमणकौतुकोच्चलितरामकीर्त्यङ्गनाप्रयाणपटहध्वनिं प्रथयति स्म तारध्वनिः॥१०५॥

- कं प्रथयति स्म? जगद्भ्रमणकौतुकोच्चलितरामकीर्त्यङ्गनाप्रयाणपटहध्वनिम् = विश्वे सर्वत्र सञ्चरितुं कौतूहलात् प्रस्थितायाः श्रीरामस्य यशोलक्ष्म्याः यात्रारम्भे भेरीनिनादम्

नवः कठिनकर्षणत्रुटितचापजन्मा क्षणाद्दिशां द्विरदघीङ्कृतैः कृतहरित्पतिस्वागतः।
जगद्भ्रमणकौतुकोच्चलितरामकीर्त्यङ्गनाप्रयाणपटहध्वनिं प्रथयति स्म तारध्वनिः॥१०५॥

- अन्वयः – कठिनकर्षणत्रुटितचापजन्मा नवः तारध्वनिः क्षणात् दिशां द्विरदघीङ्कृतैः कृतहरित्पतिस्वागतः जगद्भ्रमणकौतुकोच्चलितरामकीर्त्यङ्गनाप्रयाणपटहध्वनिं प्रथयति स्म
- तात्पर्य्यम् – रामस्य दृढाकर्षणेन भग्नात् शिवधनुषः अभूतपूर्वः उच्चः शब्दः उत्पन्नः। तच्छ्रुत्वा झटिति भयेन दिग्गजाः घींकारं कृतवन्तः । सः नादः विश्वे सर्वत्र सञ्चरितुं कौतूहलात् प्रस्थितायाः श्रीरामस्य यशोलक्ष्म्याः यात्रारम्भे भेरीनिनाद इव आसीत् । दिग्गजानां घींकारश्च दिक्पालकैः कृतस्य स्वागतस्य ध्वनिः इव आसीत् ।

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education - Technology

नवः कठिनकर्षणत्रुटितचापजन्मा क्षणाद्दिशां द्विरदघीङ्कृतैः कृतहरित्पतिस्वागतः।
जगद्भ्रमणकौतुकोच्चलितरामकीर्त्यङ्गनाप्रयाणपटहध्वनिं प्रथयति स्म तारध्वनिः॥१०५॥

- कठिनकर्षणत्रुटितचापजन्मा – कठिनं कर्षणम्, कठिनकर्षणेन त्रुटितः, कठिनकर्षणत्रुटितः चापः, कठिन..चापात् जन्म यस्य सः । नकारान्तः, पुं, १.१
- दिशाम् – शकारान्तः, स्त्री, ६.३
- द्विरदघीङ्कृतैः – द्विरदानां घीङ्कृतानि, तैः । “दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः” (अमरः)

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

नवः कठिनकर्षणत्रुटितचापजन्मा क्षणाद्दिशां द्विरदघीङ्कृतैः कृतहरित्पतिस्वागतः।
जगद्भ्रमणकौतुकोच्चलितरामकीर्त्यङ्गनाप्रयाणपटहध्वनिं प्रथयति स्म तारध्वनिः॥१०५॥

- कृतहरित्पतिस्वागतः – हरितां पतयः, हरित्पतीनां स्वागतम्, कृतं हरित्पतिस्वागतं येन सः । “दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः।”
- जगद्भ्रमण... – जगतः भ्रमणम्, जगद्भ्रमणस्य कौतुकम्, जगद्भ्रमणकौतुकेन उच्चलिता, रामस्य कीर्तिः, रामकीर्तिः एव अङ्गना, जगद्भ्रमणकौतुकोच्चलिता रामकीर्त्यङ्गना, जगद्...कीर्त्यङ्गनायाः प्रयाणम्, पटहस्य ध्वनिः, जगद्...प्रयाणस्य पटहध्वनिः, तम्

नवः कठिनकर्षणत्रुटितचापजन्मा क्षणाद्दिशां द्विरदघीङ्कृतैः कृतहरित्पतिस्वागतः।
जगद्भ्रमणकौतुकोच्चलितरामकीर्त्यङ्गनाप्रयाणपटहध्वनिं प्रथयति स्म तारध्वनिः॥१०५॥

- प्रथयति – "प्रथ प्रख्याने" + णिच् + लट्, प्रथम.१
- तारध्वनिः – तारः ध्वनिः । "काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे। कलो मन्द्रस्तु गम्भीरे तारोऽत्युच्चैस्त्रयस्त्रिषु" (अमरः)
- रूपकालङ्कारः
- पृथ्वी वृत्तम् – "जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः" । ८+९=१७

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

# सङ्क्षेपः

- रामेण हरकोदण्डभङ्गः
- धनुर्भङ्गात् जनितस्य नादस्य वर्णनम्






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in












- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in